23 तत्र स्थूलशरीरारम्भं याज्ञवल्क्य आह —

आहुत्याप्यायते सूर्यस्तस्माद्वृष्टिरथौषधिः।
तदन्नं रसरूपेण शुक्रत्वमुपगच्छति॥
स्त्रीपुंसयोस्तु संबन्धे विशुद्धे शुक्रशोणिते।
पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत्प्रभुः॥

शैवे —

अण्डजाः स्वेदजाश्चोद्भिदाश्च जरायुजाः।
चतुर्विधास्ततश्चैषां जन्म सप्तविधं स्मृतम्॥
देवाश्च मानुषाश्चैव चतुष्पादाश्च पक्षिणः।
उरःप्लवाश्च जलजाः स्थावरास्सप्तयोनयः॥
लक्षं चतुरशीतिश्च जीवानां योनयः स्मृताः।
देवाश्च रुद्रलक्षं स्युः नवलक्षं च मानुषाः॥
दश लक्षं चतुष्पादाः

— ओं॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24.

॥ आचार्यलक्षणम् ॥

आचार्यलक्षणं वक्ष्ये साल्लिगस्थापनादिषु ।
शैवं चतुर्विधं ज्ञेयं शैवं पाशुपतं तथा ॥
सामं लाकुळमित्येते चतुर्भेदाः प्रकीर्तिताः ।
एतेषु शैवभेदेषु यदा येन च दीक्षितः ॥
तेन तन्त्रेण कर्तव्या स्थापनादिक्रियास्तथा ।
एकेन दीक्षितस्त्वेषु सर्वा वै स्थापनादिकाः ॥
यः करोत्यन्यतन्त्रेण तन्त्रसंकर उच्यते ।
तेन दोषेण तद्वास्तु राजराष्ट्रं विनश्यति ॥
PL 85b. तस्मात्तत्तन्त्रदोषांश्च वर्जयेत्तन्त्रसंकरम् ।
वामदक्षिणसिद्धान्ताश्शुद्धशैवास्त्रिधा मताः ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24.

मूलावतार तन्त्रादि शास्त्रं यन्नाम शैवकम्।
तद्भेदादि च सर्वञ्च मया प्रोक्तं पुरा द्विज॥
स्वच्छन्दादि च शास्त्रं च दाक्षिणं शैवमुच्यते।
आचार्येण समायुक्तं मया प्रोक्तं पुरा तु तत्॥
कामिकादीनि तन्त्राणि सिद्धान्ता इति कीर्तिताः।
संकरं दोषमेतेषां वर्जयेच्च प्रयत्नतः॥
कामिकं योगजं चिन्त्यं कारणं त्वजितं तथा।
दीप्तं सूक्ष्मं सहस्रं चाप्यंशुमान् सुप्रभेदकम्॥
विजयं चैव निश्वासं स्वायंभुवमथानलम्।
वीरं च रौरवं चैव मकुटं विमलं तथा॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24.

चन्द्रज्ञानं च बिम्बं च प्रोद्गीतं ललितं तथा।
सिद्धं सन्तान शर्वोक्तं पारमेश्वरमेव च॥
किरणं वातुलं चैव। त्वष्टाविंशति संहिताः।
ऽऽतेषामेकभेदत्वात् न दोषाय तु संकरः॥
किंचिदेषु विशेषोऽस्ति तद्विशेषं शृणु द्विज॥
प्रारब्धं येन तन्त्रेण। तत्तन्त्रेण समापयेत्॥
नोक्तं चेदन्यतन्त्रेण तत्सर्वं तु समापयेत्।
ऽऽकेन वर्तमानेन क्रियायाः कारणं विना॥
सा चान्येन कृतं चेत्तु तत्स्यादाचार्यसंकरः॥
वैगुण्यात्कारणस्यैव विरोधे सति यत्र तु॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

सा क्रिया तस्य शिष्येण कर्तव्या तेन शास्त्रतः।

अन्यथा सा कृता चेत्तु कर्तृनाशो न सँशयः॥

PL86a. पञ्च शैवाः समाँख्याता स्सिद्धान्ते तु प्रजापते।

प्रथमोऽनादिशैवस्तु स देवश्च सदाशिवः॥

आदिशैवो द्वितीयस्तु शिवश्चेति स उच्यते।

आदौ सदाशिवेनैव दीक्षितस्त्वादिशैवकाः॥

कौशिकः काश्यपश्चैव भारद्वाजोऽथ गौतमः।

अगस्त्यश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः॥

कौशिकः शिवमूर्त्या तु दीक्षितश्शिवगोचरः।

काश्यपस्त्वीश्वरेणैव शिखागोचरसँज्ञकः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

ईशानेन भरद्वाजो दीक्षितो ज्योतिगोचरः।
गौतमो ब्रह्ममूर्त्या तु सावित्रीगोचरः स्मृतः॥
अगस्त्यश्चोर्ध्ववक्त्रेण दीक्षितो व्योमगोचरः।
ऋषीणां चैव पञ्चानां गोचरास्स्य प्रकीर्तिताः॥
आदिशैवा इमे प्रोक्ता गोचरः कुलमुच्यते।
कुलेष्वेतेषु संजाता स्थापनादिक्रियास्तथा॥
सदा प्रवृत्तकास्त्वेते ह्यादिशैवा इति स्मृताः।
तृतीयस्तु महाशैवस्स्य शैवो विप्र उच्यते॥
चतुर्थश्चानुशैवश्च नृपा वैश्या इति स्मृताः।
पञ्चमोत्तरशैवस्तु स शूद्र इति कथ्यते॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

बिन्दूर्ध्वो नाश्रिता प्रोक्ताः आदिशैवस्तथा स्मृताः।
आदिशैवाग्र(श्र?)तः प्रोक्ता महाशैवानुशैवकाः॥
महाशैवानुशैवाश्च तथावान्तर शैवकाः।
आत्मार्थयजनं कुर्युः न कुर्युश्च परार्थकम्॥
तेषु तन्त्रेण शर्द्र स्तु ज्ञात्वा संपूजयेच्छिवम्।
आदिशैवेन कर्तव्यमात्मार्थं च परार्थकम्॥
स्थापनं यजनं सर्वं आदिशैवार्हकं विदुः।
P.L.86 b. कृतं चेदन्यथा चेत्तु आभिचाराय तद्भवेत्॥
कुमारी हतवभ्यस्थ पूत कृष्णमृगोऽद्भवम्।
जातिस्तत्रादिशैवाश्च आचार्यो वर उच्यते॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

## " आचार्यलक्षणम् "

## " कारणे आचार्यलक्षणम् "

शैवसिद्धान्ततत्त्वज्ञो देवाग्निगुरुपूजकः ।
सर्वाचारसमायुक्तस्तपस्वी जनवत्सलः ॥
सहिष्णुरूर्जितमतिः निर्द्वन्द्वो विगतस्पृहः ।
ज्ञेयोपादेयतत्त्वज्ञस्तत्त्वार्थे तु व्यवस्थिता ॥
क्रियावान्निपुणश्चैव वीतरागो विमत्सरः ।
परे तत्त्वे समायुक्तः शिवस्यासनतत्परः ॥
सर्वशास्त्रार्थकुशलः समयाचारपालकः ।
गृहस्थस्सात्त्विको वाग्मी सुशीलः प्रियदर्शनः ॥
शिखावान् बन्धकेशश्च श्मश्रुरोमादिवर्जितः ।
नीरोगी दीक्षितश्चैव मन्त्रमुद्राक्रियान्वितः ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

पदवाक्यप्रमाणज्ञः पशुशास्त्रपराङ्मुखः।
शिवशास्त्रैकचित्तात्मा सर्वप्राणिहिते रतः॥
वास्तुविद्याकृताभ्यासश्शल्योद्धारविशारदः।
सर्वावयवसंपूर्णः सर्वलक्षणसंयुतः॥
ईदृग्लक्षणसंपन्नः स्थापकश्रेष्ठ उच्यते।
पिङ्गाक्षी डाम्भिकः कुब्जो वामनः खुनखी कृशः॥
पिशुनो निर्दयस्तब्धश्चपलः पारदारिकः।
पुनर्भूर्निर्घृणः क्लीबो हीनो नैपुण्यवर्जितः॥
सन्यासी तार्किकाम्बष्ठः स्वशास्त्रार्थविरोधिकः।
पुण्यरङ्गोपजीवी च कृतघ्नो नास्तिकस्तथा॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

गुरुदेवद्विजातींश्च निन्दितो निन्दको भिषक् ।

? खञ्जाङ्गी श्यापनन्तु च्छ कुसुमाक्षी च वातकी ॥

हीनाङ्गी पिशुनश्चैव दुश्शीलो दन्तहीनकः ।

PL.87a. बालो बहुगुणैर्युक्तो वृद्धो विकलदन्तकाः ॥

पारापवादि दुश्चर्मी बधिरश्चिबुकस्तथा ।

अतिस्थूलश्च कालश्च धूर्तो वै रक्तकेशकः ॥

गायको नर्तकश्चैव खञ्जो नग्नश्च वेधितः ।

दारावारीजकः पङ्कुः पतितः पापकर्मकृत ॥

आलस्यो विकटाङ्गश्च रोगी चैवातिभोजनः ।

एभिस्तु लक्षणैर्युक्तो गर्हितस्सर्वकर्मसु ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24.

आदिशैवकुले जातः मूर्तिपास्तादृशाः स्मृताः ।
देशिकारम्भतन्त्रे तु निपुणा गतसंशयः ॥
स्थापकस्यानुकूलाश्च त्वभिप्रायविदस्तु ते ।
मूर्तिपा मूर्तिधारांश्च सर्वकर्मसु कौशलाः ॥
पञ्चानां कौशिकादीनां गुरुस्थानमिहोच्यते ।
कौशिकस्य महच्छत्रं पाण्डरं काश्यपस्य तु ॥
भारद्वाजमुनेश्चैव नागोद्भवमुदीरितम् ।
नागरं च चतुर्थस्य पाण्डोमः पञ्चमस्य तु ॥
ऋषीणां चैव पञ्चानां गुरुस्थानं प्रकीर्तितम् ।
शिवगोचर आख्यातो गुह्यमन्त्रेण संयुतः ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

ज्योतिर्गोचरसंज्ञावान् वक्रमन्त्रेण संयुतः ।
व्योमगोचरसंज्ञस्तु बहुरूपेण संयुतः ॥
कौशिको नन्दनो दक्षो विश्वामित्रस्सनन्तकः ।
वाल्मीको नमुचिस्सत्यः पुलस्त्यः पुलहस्तु यः ॥
अति दीर्घस्स वक्राशो बोधायनसनातनौ ।
सनत्कुमारो मेधावी वालखिल्यो मुनिस्तथा ॥
आश्लायनश्च इत्येते शिवगोचरवर्तिनः ।
(भरद्वाजस्त्रिशङ्कुश्च मार्कण्डेयशिरोम्यकः ॥)
PL.87b. काश्यपश्चाङ्गिरस्स्थूल कश्यपश्च वनोनिघः ॥
शान्यायनश्च शालुण्डुः शङ्कुकर्णः पुरातनः ॥
शङ्खः स्थूलशिरवश्चैव शिरजो रोमहर्षणः ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

२५

आपस्तम्ब इमे सर्वे शिखागोचरवर्तिनः ।

भरद्वाजस्त्रिशङ्कुश्च मार्कण्डेयशिरोभ्यकः ॥

धूम्रश्च देवलश्शाङ्खः पिङ्गलो वरुणश्शुनः ।

विश्वावसुर्व्याघ्रपादो रोमशो नखवासुकी ॥

कृष्णश्चैव त्विमे सर्वे ज्योतिर्गोचरवर्तिनः ।

गौतमो गालवश्चैव मौद्गल्यो यवनस्तथा ॥

गार्ग्यश्च विजयश्चैव बिन्दुश्च बन्धबस्तथा ।

ऋष्यशृङ्गो वसिष्ठश्च कात्यायनबृहस्पतिः ॥

सावित्रीगोचरास्त्वेते भ्रातरो विगतस्पृहाः ।

अगस्त्यो मुद्गलो वत्सो श्वेतकेतुर्विभावसुः ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24.

पराशरः करीशश्च चम्पको नीललोहितः।
पाण्ड्योद्यश्च त्विमे सर्वे व्योमगोचरवर्तिनः॥
कुलेष्वेतेषु संजाताः आदिशैवा इति स्मृताः।
तानेवै शंकरो ज्ञात्वा कारुण्यं कुरुते शिवः॥

इति कारणे प्रतिष्ठातन्त्रे

आचार्यलक्षणविधिपटलः

———.

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

॥(मकुटे) आचार्यलक्षणम्॥

अथातत्सं प्रवक्ष्यामि आचार्यस्य तु लक्षणम्।
मलपाकविधिं कृत्वा शिवभक्तिर्भवेद्यदा॥
तदा प्रभृति कर्तव्या लिङ्गसंस्थापने रतिः।
आचार्यं पूर्वमन्वेष्य मूर्तिपास्तदनन्तरम्॥
चतुर्वर्णकुलोद्भूतश्चतुर्गोचरसंस्थितः।
शिवशास्त्रार्थतत्त्वज्ञः शिवज्ञानविशारदः॥
शिवसिद्धान्ततत्त्वज्ञः शिवाग्निगुरुपूजकः।
सर्वावयवसंपूर्णस्सर्वलक्षणसंयुतः॥
P.L.88a वयष्षोडशकादूर्ध्वं सप्तत्याश्चाप्यधोगतः।
शिखी वा बन्धकेशो वा श्मश्रुरोमादिवर्जितः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

गृहस्थो भौतिकाश्चैव सदा मुख्यस्थबोधनः।
क्रियादिज्ञानपर्यन्तमेकतन्त्रैस्सुनिश्चितः॥
क्रियापादे तु निपुणः चर्यापादानुवर्तकः।
योगपाद कृताभ्यासो ज्ञानपादानुरस्थितः॥
हे?
गेयोपादेयकर्मज्ञस्तत्त्वार्थे सुव्यवस्थितः।
परभावं गतः श्रेष्ठस्तत्त्वातीतपरार्थवित्॥
ब्रह्मचर्यरतश्चैव भस्मोद्धूलितविग्रहः।
देहबन्धनिमित्तज्ञो विधिवल्लक्षणान्वितः॥
शिवज्ञानामृतानन्दस्योहापोहविधानवित्।
ईदृग्भूतस्तु यो विद्वान् स्थापनादिच कारयेत्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24.

स एव स्थापको वत्स नेतरस्सर्वगो विभुः।
स्थापनादि क्रियास्सर्वा न शैवस्तु विवर्जयेत॥
कर्तव्यं शुद्धशैवेन प्रतिष्ठाद्युत्सवान्तकम्।
(प्रतिष्ठाद्यर्चनान्तकम्)
अन्यथा तु कृतं यत्तु आभिचारकमेव हि॥
न तं गृह्णाति देवेशो न फलं जायते ततः।
मूर्तिपांस्तु ततो वक्ष्ये ब्राह्मणादिकुलोद्भवान्॥
आचार्यारम्भशास्त्रे तु तस्मिन् विगतसंशयान्।
तदभिप्रायतत्त्वज्ञानाचार्यस्यानुकूलकान्॥
मूर्तिं च मूर्तिधारं च ज्ञात्वा सम्यक्समाहितान्।
एतद्गुणसमायुक्तान् गृह्णीयात्तान्विचक्षणः॥
वर्ज्यमानांस्ततो ज्ञात्वा वर्जयेत्तान्प्रयत्नतः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24. अयोग्यन् [?]?

स्वशास्त्रसमयद्वेषान् अङ्गप्रत्यङ्गहीनकान् ।
PL.88b. नास्तिकौ मत्सराद्रोगान् बधिनान् वृद्धिजीवकान् ॥
पिशुनान् क्रूरकर्मज्ञान् चपलान् पारदारकान् ।
डम्भान् कुरोधकान् गर्वान् न सौम्यांश्च कृतघ्नकान् ॥
सन्यासान्नर्तकान् जारान्निर्दयाङ्गांश्च कपालिकान् ।
अतिह्रस्वानतिस्थूलानतिदीर्घान् कृशानपि ॥
वक्रदन्तांश्च कुनखान् युवैवखलतिन्तथा ।
शिपिविष्टाह्विणोपेतान् श्मश्रूश्च पिङ्गलान् ॥
प्रतिष्ठातन्त्रे कल्पज्ञान् पशुशास्त्रानुरञ्जकान् ।
तत्त्वोपदेशहीनांश्च समनस्कोज्जनर्ककान् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

नूनाङ्गानतिरिक्ताङ्गान्वामान्पुण्योपजीवकान्।
डम्भांश्च गुह्यकांश्चैव नग्नकान्श्यावदन्तकान्॥
ईदृशान्वर्जयित्वा तु सर्वकर्मबहिष्कृतान्।
यदि मोहेन गृह्णीयात् सान्निध्यं न कदाचन॥
आचार्यमूर्तिपांश्चैव पूर्वोक्तान् संप्रगृह्य च।
ततश्चान्वेषयेत्तद्वच्छिल्पिनं स्वकुलोद्भवम्॥
स्थपतिस्सूत्रग्राही च वर्धकी स्थक्षकस्तथा।
स्थापकेनोदितं सर्वं शिल्पिशास्त्रेण निर्मितम्॥
प्रासादा प्रकर्ता यः सोऽपि चि स्थपतिः स्मृतः।
सूत्रग्राही च मानज्ञो द्रव्ययोक्ता च वर्धकी॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

तन्त्रकारणयोग्योऽपि सोऽपि तक्षक उच्यते।

छेद्ये तु छेदयेद्वृक्षान् भेद्ये तु द्रव्यभेदकः॥

वेध्यश्च वेधये द्रव्या शिल्पिवर्गेषु चोच्यते।

स्थपतिस्सूत्रग्राहीभ्यां प्रासादं प्रतिमां तथा॥

PL.89a. अक्षिमोक्षादि तत्सर्वं कारये|त्तक्षकोत्तमः।

शेषाणि वर्जयेत्तत्र मन्त्रकर्मसु सर्वदा॥

शेषाणां शिल्पिकार्याणां ~~शिल्पि~~ स्थापकश्रेष्ठ उच्यते।

स्थपति शिल्पिकार्येषु स्थापकस्यानुसारतः॥

स्थपतिश्शास्त्रकर्मज्ञः कृतकर्मोऽभिजातवान्।

न हीनाङ्गोऽतिरिक्ताङ्गो धार्मिष्ठस्सत्यवाचकः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24.

बलिज्ञानान्वितस्साधुर्दृढबन्धुरतन्त्रितः।

ईदृशं शिल्पिनं ग्राह्य प्रारभेत् कर्म शैविकम्॥

आचार्यलक्षणं प्रोक्तं करणानां विधिं शृणु।

इति सुप्रभेदे प्रतिष्ठातन्त्रे

क्रियापादे आचार्यलक्षण-

विधिर्विंशति पटलः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

॥ मतङ्गपारमेश्वरे आचार्यलक्षणम् ॥

विद्यापादार्थकुशलः क्रियापादगतक्रमः ।
योगपादकृताभ्यासश्चर्यापादानुवर्तकः ॥
सितचन्दनलिप्ताङ्गः श्वेतमाल्याविभूषितः ।
सुश्लक्ष्णश्च सुवस्त्राढ्यः सुधूपामोद ऽव च ॥
मकुटेन विचित्रेण स्फुरन्माणिक्कतेजसा ।
मुक्ताफलमये शुभ्रे कुण्डले रुक्मसंश्रिते ॥
चित्रे कर्णविलम्बे तु कर्णामाणिविभूषितम् ।
सुकृताभरणं भद्रं ब्रह्मसूत्रं च मौक्तिकैः ॥
निर्मितं वर्तुलं भद्रं कटिसूत्रं च काञ्चनम् ।
नायकेन विचित्रेण मध्ये नीलेन वर्चसा ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24.

पद्मरागमयेनाथ लक्षणै र्लक्षितेन च।

PL 89 h. केटके च शुभे धार्ये वज्ररत्नविचित्रिते॥

धार्यं दक्षिणहस्तेन रत्नाढ्यं चाङ्गुलीयकम्।

ततश्चोपविशेन्मौनी कौबेरी दिङ्मुखस्सदा॥

दिशोवलोकनेत्राभ्यां पिङ्गपिङ्गमनुस्मरन्।

इति मतङ्गपारमेश्वरे

आचार्यलक्षणविधि पटलः

=:

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

## कामिके आचार्याभिषेकपटले

### आचार्यलक्षणम्

आदिशैवकुले जातः श्रेष्ठः स्यात् स्थापनादिषु ।
विप्रा दश चतुर्वर्णा अपि योग्याः स्वकर्मणि ॥
दीक्षायां सर्वमर्त्यानां प्रतिष्ठायामथोत्सवे ।
स्नपने प्रोक्षणेऽन्यत्र प्रायश्चित्तेऽभिषेचने ॥
व्याख्यानादौ शक्तस्स्यात्स्वार्थे वाथ परार्थका ।
सर्वे देवार्चने विप्रास्त्वादिशैवो गुरूत्तमः ॥
विप्रादयस्त्रयो वर्णा दीक्षायां स्थापनेऽपि च ।
ब्राह्मण क्षत्रियादीनां क्षत्रियो वैश्यशूद्रयोः ॥
वैश्य शूद्रस्य दीक्षायां स्वस्वजातावपीक्षिते ।
स्वार्थेऽष्टौ चललिङ्गस्य प्रतिष्ठायां त्रयस्त्वमे ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24.

शूद्रोऽपि शूद्रदीक्षायां स्वार्थे च चलसंज्ञिते ।

बाणलिङ्गे क्षणे वापि स्थापको यदि नैष्ठिकः ॥

सनादाखिलतन्त्रेषु शिवज्ञाने विशेषतः ।

शूद्रस्यापि गृहस्थस्य नित्येशावेन योग्यता ॥

तत्रापि नादसहितैर्मन्त्रैरेव प्रकीर्तितः ।

अभिषेकेऽपि योग्यायं किं पुन स्थापनादिषु ॥

P.L.90a? भद्रमूर्तिर्विशालोरगते रोघलोचनम् ।

प्रलम्बबाहुराताम्रनखपाणितलाधरः ॥

अलग्नपृष्ठे गाम्भीरा नाभिरुन्नतकन्धरः ।

सुवृत्तं जानुजङ्घोरुस्वेदचरणौ महान् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

शैवागमार्थसंसिद्धः त्रिप्रमाणविशारदः ।
ज्ञानयोगक्रियाचर्यपारगः परमास्तिकः ॥
देवाग्निपूजको नित्यं गुरुभक्तिपरायणः ।
संप्रदायविशुद्धात्मा गुरुपुत्रप्रशंसितः ॥
देवताप्रश्न तत्वज्ञः षड्विधाध्वविशारदः ।
लिङ्गादिलक्षमवेत्ता च विभक्तिज्ञानसंयुतः ॥
कामिकादिशिवज्ञानसिद्धयुक्तिविशारदः ।
ईदृशः स्थापकश्शुद्धो निन्दितं परिवर्जयेत् ॥
नास्तिकं पिशुनं पापं शूरं निर्दयमेव च ।
पतितं च दुराचारगुरुद्रोहं च हिंसकम् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

शिवद्रोहं गणद्रोहीं निष्ठुरं दुष्टचेष्टितम् ।
अन्धः काणश्च पङ्गुश्च तथा दन्तरमेव च ॥
तथैव बधिरं नासा कर्णाङ्गुल्या विहीनकम् ।
गण्डिनं कुष्ठिनं चैव पिङ्गाक्षं क्षयरोगिणम् ॥
अचेष्टावयवं चाधिकाङ्ग व्यामोहितं तथा ।
महोदरं प्रमेयार्थं प्रतिवक्रं विवर्जयेत् ॥
पोगण्यकुब्जकं चैव वक्रनाडिककन्धरम् ।
दुश्चर्मश्चाथ गौरागमत कृष्णाङ्ग संयुतम् ॥
अतिस्थूलं कृशं चैव अतिदीर्घं च वामनम् ।
केराक्षं बृहत्कुक्षि पङ्गु पादानि कश्चरम् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

कुण्डं च गोळकं चैव दीधितं परिवर्तकम् ।
परिवेत्तारमङ्गं च देवलं च पुनर्भुवम् ॥
PL.90b. अभक्ष्यभक्षणं चैव कुण्डं / भस्माङ्कुरं तथा ।
खट्वाङ्गं श्यावदन्तं च आरूढं पतनं तु वा ॥
असत्यं वृषलं चैव प्रत्यं वेश्यापतिं तथा ।
असच्छास्त्ररसं क्लीबं श्याविकं कुनखं तथा ॥
अथाव्यसनिनं पारदारिकं वृषलीपतिम् ।
श्वित्रिणं गायकं चैव नर्तकं चैव वर्जयेत् ॥
परराष्ट्रप्रसूनं च शिंशु वृद्धं च संज्ञितम् ।
परापवादशीलं च तथा बाहुकिणे वृतः ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

सूतकं कितवं वैद्यं कुतर्कस्थं पुरोधसम्।
बौद्धादिशास्त्रनिरतं सँन्यासव्रतिनं तथा॥
चपलं च शठं चारं वृद्धाजीवनमेव च।
वैशेषि ?
शुष्कतर्करतं चैव न्याये वैदैविकेऽपि च॥
सांख्ये द्विविधभेदे च मायावादे र्हते मते॥
बौद्धलौकायते शास्त्रे मीमांसायां विशेषतः॥
अन्येष्वपि कुमार्गेषु कापाले पाञ्चरात्रके॥
सोमसिद्धान्तके वाऽपि पूर्वाम्नाये तु पश्चिमे॥
भैरवे कुळशास्त्रे च शैवेष्वेताद्दशेषु च॥
सिद्धप्रमेयजाले च कृताभ्यासं निरन्तरम्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

काव्यनाटकसक्तं च भरतादिरतं नतम् ।
कामशास्त्रकृताभ्यासं पदव्युत्केरतं नरम् ॥
ज्योतिर्ज्ञानिपरं वेदपुराणाहितचेतसम् ।
तात्सिद्ध पुरुषार्थेषु कृतयत्नं परित्यजेत् ॥
कामिकादिशिवज्ञानं वेदार्थज्ञानमेव च ।
समयो मन्यते मोहात् तं प्रयत्नेन वर्जयेत् ॥
शिवसिद्धान्तसंसिद्ध ज्ञानयोगक्रियासु च ।
P.L.91a. चार्यायां वा सुसंसिद्ध प्रमेये शिवभाषिते ॥
शैवार्थदे हिते हित्वा विचारं संगतं नरम् ।
योऽन्यत्र कुरुतेऽभ्यासं दुर्मती तं विवर्जयेत् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24.

अन्यायेन शिवद्रव्यहारिणं भग्नसन्ततिम्।
अल्पविद्यं कुतर्कं च विरूपं परिवर्जयेत्॥
देवलं च तथाम्बष्ठ मूहापोहविवर्जितम्।
समाजगोत्रसंबन्धं कुसुमाक्षं च वर्जयेत्॥
इत्युक्तलक्षणोपेतं शुद्धलग्नोदयेन हि।
अभिषेकं ततः कुर्यादङ्कुरार्पणपूर्वकम्॥

इति कामिके आचार्यलक्षणविधिः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24. ॥ कारणे* आचार्यलक्षणम् ॥

गुरूणां चैव सर्वेषां मुख्यो दीक्षागुरुः स्मृतः ।
धर्मार्थकाममोक्षाणां कारणं सद्गुरुः स्मृतः ॥
विनश्यत्यन्धकारस्तु यथा दीपस्य सन्निधौ ।
गुरोर्निरीक्षणादेवं सर्वं पापं प्रणश्यति ॥
तस्माद्गुरुः शिवः प्रोक्तो गुरुजाया मनोन्मनी ॥
यत्नतः प्राविशोत्तं तु परमेश समं गुरुम् ।
अनुरक्तं तु शिष्याणां शिवमन्त्रविशारदम् ॥
आदिशैवान्वयोद्भूतं सर्वलक्षणसंयुतम् ।
विमुक्त प्राकृतं भावं तेन व्याधिकृतं पुनः ॥
प्राहुश्शिवतनुं तस्य सूतकप्रेतकं न हि ।
न लिप्यते यथा तेन पद्मपत्रमिवाम्भसा ॥

॥ इत्याचार्यलक्षणम् ॥

× मुद्रिते कारणे आचार्यलक्षण [illegible] नैतानि पद्यानि [illegible]

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

॥ समयाचाराधिकारी ॥

आचार्यलक्षणं वक्ष्ये दीक्षायोग्य प्रबोधनम् ।
चातुर्वर्णोद्भवः प्राप्तः सर्वशास्त्रपरिग्रहः ॥
वर्णेनाचार्यसंबन्धो दीक्षानाचार्यकल्पना ।
अवर्णिनं गुरुत्वंच न कुर्याद्विधिवद्विजः ॥
यतिर्गुरु द्विजादीनां वर्णानां ब्राह्मणो गुरुः ।
P.L. 91 b. पतिरेव गुरुस्त्रीणां सर्वेषां मातुलो गुरुः ॥
राज्यपापं तु राजानां राजपापं पुरोहितम् ।
स्त्रीपापं पुरुषं याति शिष्यपापं गुरूनपि ॥
आचारनियमाद्योभावशुद्धो गुणसंज्ञकः ।
जपध्यानसमायुक्तो नित्याग्नौ होमकर्मकृत् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24 जितेन्द्रियो महाप्राज्ञो महामन्त्रज्ञ विग्रहः।
इत्यादि गुणसंपन्नस्सदाचार्य प्रबोधकः॥
कामक्रोधभयं शौक मद मात्सर्य षट्ककम्।
संत्यज्य साक्षेवात्प्राप्तः गुणस्स्वाचार उच्यते॥
आचार्यश्च गुणस्वामी त्रिविधं तु यथाक्रमम्।
आचार्यो बालदीक्षार्थो मन्त्र तन्त्रधरो गुरुः॥
उपदेशक्रमं कुर्वन् स्वस्वामी तु विधीयते।
स्वामिनोऽनुग्रहाभावे भुक्ति मुक्ति न सिध्यति॥
जन्तोरधः क्रमात्पिण्ड नानारूपेण दृश्यते।
आचार्यो मनसा तत्र दिव्यं तेजो विचिन्तयेत्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in
accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

२५ ब्रह्मज्ञानं महाज्ञानं वेदवेदान्तनिर्णयम् ।
सत्यं ज्ञानमनन्तं च त्वानन्दं मुक्तिशाश्वतम् ॥
ज्ञानिनां च चतुष्पादं पादानि त्रीणि योगिनाम् ।
पादे क्रियावते द्वे च चर्यैका च चारित्रिणः ॥
ऽतत्पादचतुष्कस्य तु ज्ञानगुरु स्मृतः ।
दीक्षां कुर्यात् सभुक्त्यर्थं मोक्षासिद्ध्यर्थमेव च ॥
अधमो लिङ्गभक्तिश्च मन्त्रभक्तिश्च मध्यमः ।
उत्तमोऽद्वैतभक्तिश्च गुरुभक्तिः परा स्मृता ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

## सद्गुरुलक्षणम्

देवसिद्धउपायज्ञस्त्रिविधं गुरुरूपकम् ।
अनेन दृष्टभावेन वाच्यार्थेन त्रिबोधकम् ॥

शिवोऽहंभावना निष्ठा त्रैलोक्ये शिवदर्शनम् ।
सर्वेन्द्रियविशुद्धा या निष्क्रिया सत्क्रियात्मिका ॥

PL. 92a वाचां सिद्धिर्मनस्सिद्धिर्देहसिद्धिः प्रकाशिकाः ।
सर्वैस्समानदृष्टिश्च निर्मोही निरपेक्षकः ॥

त्रिसिद्ध्यै पूर्णदेवाय स्वानुभूत्यै महात्मने ।
नानेकप्रकारेण शास्त्रदृष्टप्रबोधकम् ॥

प्रत्यक्षेणानुमानेन शब्दप्रमाणेन बोधकः ॥
अचिन्त्यानुभवो ज्ञेयः ग्रातत्सद्गुरुलक्षणम् ॥

═══

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

"ब्राह्मण क्षत्रिया वैश्याः शूद्रो वा परमेश्वरि।
आचार्यत्वेन युक्ताश्च ते सर्वे तु शिवा स्मृताः॥
अन्यथा स्वस्वरूपेण ये पश्यन्ति नराधमाः।
नरके ते प्रपश्यन्ते सदारव्यमिव सत्रयम्॥"

॥ इति देविकालोत्तरे ॥

ब्राह्मणा क्षत्रियादीनां क्षत्रियः शूद्रवैश्ययोः।
वैश्यश्शूद्रस्य दीक्षायां स्वस्वजातावपीष्यते॥
स्वार्थेऽष्टौ चरलिङ्गस्य प्रतिष्ठायां त्रयस्त्विमे।
शूद्रोऽपि शूद्रदीक्षायां स्वार्थे तु चलसंज्ञिते॥
बाणलिङ्गे क्षणे वाऽपि स्थापको यदि नैष्ठिकाः।
सनादाखिलमन्त्रेषु शिवज्ञाने विशेषतः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in
accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24

शूद्रस्यापि गृहस्थस्य नित्येष्टावे च [व?] योग्यता।
तत्रापि नादसहितैर्मन्त्रैरेव प्रकीर्तिता:॥
अभिषेकेऽप्ययोग्या यं किंपुन स्थापनादिषु।]
[इति? कामिके॥

जटी वा बद्धकेशी वा शिखी वाचार्यमुच्यते।
मुण्डमुद्रा महासेन दासमुद्रेति कथ्यते॥
गुरोराज्ञा एवं मृत्युः मन्त्रदाने दरिद्रता।
गुरुमन्त्रपरित्यागात् रौरवं नरकं व्रजेत॥
P.L. 92b. परीक्ष्य वत्सरं पूर्वं शिष्याणां तु गुणागुणम्।
गुणयुक्तांस्तु संग्राह्य गुणहीनान्विवर्जयेत॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

## गुरुपादपूजा

गुरुरूपं परब्रह्मं गुरुनामं सदाशिवः।
गुरो स्मरणमन्त्राणां मन्त्रतन्त्र निवेदयेत्॥
पूजामूलं गुरोः पादं मन्त्रमूलं गुरोर्वचः।
ध्यानमूलं गुरोर्मूर्त्तिर्मूर्त्तिमूलं गुरोः कृपा॥
गुरुर्देवो महादेवो गुरुपत्नी मनोन्मनी।
गुरुपुत्रो गुह प्राप्तो गुरुदासस्य चण्डवत्॥
विनश्यत्यन्धकारं च यथा सूर्यस्य सान्निधौ।
गुरोर्निरीक्षणं चैव सर्वपापात्प्रमुच्यते॥
गुरुपादोदकं ग्राह्यं भुक्तं पापविनाशनम्।
गुरोश्लिष्टं तु भोज्यन्ते सर्वज्ञानं तु संभवम्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24 गुरुपादोदकं पीत्वा गुरोच्छिष्टं तु भोजनम्।
गुरुवार्त्ता प्रकुर्वीत गुरुनाम सदाजपः॥
गुरो स्मरणमात्रेण गुरोरन्योन्यभावयेत्।
गुरुः पिता गुरुर्माता गुरुदेवं स्वयं शिवम्॥
शिवरिष्टौ गुरुस्थादौ गुरुरिष्टौ न संशयः।
सहस्रब्राह्मणानां तु शतानां तु तपास्विनाम्॥
सत्यमेव समं पुण्यं ऽकोऽपि गुरुपूजनम्।
गुशब्दो गुणवाक्यं स्यात् रुशब्दो रूपवाचके॥
गुणरूपसमं यस्मात् गुरुरित्याभिधीयते।
ब्रह्महत्या सुरापानं स्वर्णस्तेयमथापि वा॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24 लङ्घने गुरुवाक्य स्यात् गोवधे पञ्चपातके ।
मण्डले तु शतं पुण्यं स्थण्डिले तु सहस्रकम् ॥

P.L. 3a गौरवं कोटिगुणकं लिङ्गं द्वादशाकोटिकम् ।
आत्मार्थे शतकोटि स्यात् गुरुपूजावनन्तकम् ॥

अथवा —

गु शब्द स्त्वन्धकारो स्यात रु शब्दस्तान्निरोधकम् ।
अन्धकार विनिर्मुक्तः गुरुरित्यभिधीयते ॥

पकारं परसंयुक्तं डिकारं ज्ञानमुच्यते ।
तकारं शिवरूपं तु पण्डितशशब्द उच्यते ॥

=

आचिनोति हि शास्त्रार्थान् आचारं स्थापयत्यतः ।
स्वयमाचरते यस्मात् तस्मादाचार्य उच्यते ॥

==

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

24 अंशुमान् — अनाचार्यलक्षणम् ॥

अवर्णस्त्वकुलोद्भूतः प्रमत्तश्चातिमूढकः ।
अनाचारस्त्वशास्त्रज्ञश्चाल्पश्च ज्ञातिदूषकः ॥
आशापाशैश्च संबन्धस्त्वतिक्रूरस्त्वसंगतः ।
अत्यन्तमलिनाकारस्त्वकारो मलिनाकुलः ॥
अशीलश्चाल्पदोषज्ञो नानादुष्कर्मकृत्सदा ।
गुरुद्रोह शिवद्रोही सन्तानसमयद्रुहः ॥
शास्त्रद्रोह्यविशेषज्ञस्सद्गुरोरन्यदाचरन् ।
कामः क्रोधो मदो मोहो लोभो मात्सर्यमेषणा ॥
अहन्ताडम्भता मिथ्या संयुक्तस्स नाशकः ।
असान्निध्ये यो मोहाद्दीक्षां कुर्वन्नसद्गुरुः ॥
तस्मात्तत्पक्वभावेषु तद्बोधं नोपदेशयेत् ।
सान्निध्यमार्गे सद्बोधाद्भुक्तिमुक्तिस्सदा भवेत् ॥

॥ इति ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

कामिके — साच्छिष्यलक्षणम् —

"परीक्ष्य वत्सरं पूर्णं शिष्याणां तु गुणागुणम्।
गुणयुक्तांस्तु संग्राह्य गुणहीनान्विवर्जयेत्॥"

—.

PL.93 b. "शिकारं जन्मविच्छेदं ष्यकारं पापमोचनम्।
नकारं ज्ञानसिद्धिस्स्यात् शिष्यशब्दमिहोच्यते॥"

इत्यंशुमान्॥

"मायामलं च समयात् विशेषात्कर्मनाशनम्।
निर्वाणे चाणवं चैव अभिषेके च वासनम्॥

इति कामिके॥

"स च सद्देशसंभूत सम्पूर्त श्रुतशीलवान्।
ज्ञानाचारगुणोपेत क्षमी शुद्धाशयो वरः॥
देशशील गुणाचार गुरुभक्ति समन्वितः।
शिवानुध्यानवान् शिष्यो विविक्ष्य प्रशस्यते॥"

इति सोमशम्भुः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

[शिष्यलक्षणम्]

चातुर्वर्णोद्भवान् शिष्यानथवैवानुलोमजान् ।
गुरुदेवाग्निभक्तांश्च नित्यानुष्ठानतत्परान् ॥
सर्वलक्षणसम्पन्नः रोगहीनो जितेन्द्रियान् ।
गुरुशुश्रूषणोपेतान् क्षमायुक्तान्दयान्वितान् ॥
अब्दात् शुश्रूषणान्ते तु गृह्णीयाद्देशिकोत्तमः ।
यत्नैर्बहुविधैस्तुष्टः शुश्रूषाभ्यधिकोऽपि वा ॥
अदीक्षितैस्तु न श्राव्यान्तन्त्रं श्राव्यं तु दीक्षितैः ।
अन्यथा नरकं याति तैर्विधेया प्रतिक्रिया ॥

॥ इति शिष्यलक्षणम् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

॥ सान्निध्यलक्षणम् ॥

जननी भीरुतां चिन्त्य गुरुसेवाप्रवर्तकः।
शान्तो दान्तोऽभ्युपरतः स्वदीक्षार्थी निरूपकः॥
शरीरजार्थभाण्डारं गुरुपादे नियोजकः।
सर्वशास्त्रपरिज्ञानी शिष्येभ्यो शाम्भवो विधिः॥
शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेद्य च।
दीर्घदण्डं नमस्कुर्यान्निर्लज्जो गुरुसन्निधौ॥
तिष्ठन्नेवं स मुक्त्यर्थं वाञ्छन् सान्निध्य उच्यते।
तस्य शुद्धिं गुरुः कुर्यादाकेशात्पादतः क्रमात्।
P.L. 84a दर्शनात्स्पर्शनाच्चैव सर्व|पापात्प्रमुच्यते॥
श्रीपदं शिरसा धृत्वा पशुबन्धात् विमुच्यते॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

तस्माच्चत्त्वस्य शुद्ध्यर्थं कुर्यादात्मनि दर्शनम्।
कुर्यान्नाण्कुन्तन्दृष्ट्वा कुर्यादैक्यस्य दर्शनम्॥
शिवोऽहं भावना निष्ठा साधनं गुरुसान्निधौ।
सोऽहमस्तीति यो विद्यात् वेदान्तं चागमान्तकम्॥
सन्निव्य इति मन्तव्यस्सदाचार्यैस्समानवः।

—.

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

॥ वायुसंहिता - गुरुशिष्यलक्षणम् ॥

पुराणे वायवीयसंहितायां गुरुशिष्यादि-लक्षणम् त्रयोदशाध्याये —.

श्रीकृष्णः —

भगवन्मन्त्रमाहात्म्यं भवता कथितं श्रुतम्।
तत्प्रयोगविधानं च साक्षाश्रुति सर्मधा ॥
इदानीं श्रोतुमिच्छामि शिवसंस्कारमुत्तमम्।
मन्त्रसंग्रहणे किञ्चित् सूचितं न तु विस्तृतम्॥

? उपमन्युः —

हन्त ते कथयिष्यामि सर्वपापविशोधनम्।
संस्कारं परमं पुण्यं शिवेन परिभाजितम्॥
सम्यक् कृताधिकार स्यात् पूजादिषु नरो यतः।
संस्कारः कथ्यते तेन षड्ध्वा परिशोधनम्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

दीयते येन विज्ञानं क्षीयते पाशबन्धनम्।

तस्मात्संस्कार एवेयं दीक्षेत्यपि च कथ्यते॥

शाम्भवी शक्तिरूपा च कथ्यते च शिवागमे।

दीपोक्ष दिव्यते त्रेधा शिवेन परमात्मना॥

गुरोरालोकमात्रेण स्पर्शसंभाषणादपि।

सद्यस्संजायते चाज्ञा पाशोपक्षयकारिणी॥

सा दीक्षा शाम्भवी प्रोक्ता पाशोपक्षयभेदतः।

या यस्यान्निवृतिस्सद्यस्सैव तीव्रतरा मता॥

P.L.94b.? तीव्रा तु जीवतो स्यान्तं पुंसां पापविशो|धिका।

शक्तिज्ञानवती दीक्षा शिष्यदेहं प्रविश्य तु॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

गुरुणा योगमार्गेण क्रियते ज्ञानचक्षुषा ।
मन्त्री क्रियावती दीक्षा कुण्डमण्डलपूर्विका ॥
मन्दमन्दतरोद्देशात् कर्तव्या गुरुणा बहिः ।
शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति ॥
शिवधर्माधिकारस्य तन्मूलत्वात्समासतः ।
यत्र शक्तिर्निपतिता तत्र शुद्धिर्न्निजायते ॥
न विद्या न शिवाचारो न मुक्तिर्न च सिद्धयः ।
तस्माल्लिङ्गान्यवीक्ष्य शक्तिपातस्य सूरिणा ॥
ज्ञानेन वा क्रिया वाथ गुरुः शिष्यं विशोधयेत् ।
योऽन्यथा कुरुते मोहात् स विनश्यति दुर्मतिः ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

तस्मात्सर्वप्रयत्नेन गुरुश्शिष्यं परीक्षयेत्।
लक्षणं शक्तिपातस्य प्रबोधानन्द संभवम्॥
सा यस्मात्प्रथमा शक्तिः प्रमोदानन्दरूपिणी।
आनन्दबोधयोर्लिङ्गं अन्तःकरणविक्रिया॥
? याय स्यात् कम्बरोमाञ्च स्वय नेत्रादिविक्रिया।
शिष्योऽपि लक्षणैरेभिः कुर्याद्गुरुपरीक्षणम्॥
तत्संपर्के शिवार्चादौ स्वगतैर्वाथि तद्गतैः।
शिष्यस्तु शिक्षणीयत्वात् गुरुर्गौरवकारणात्॥
तस्मात्सर्वप्रयत्नेन गुरोर्गौरवमाचरेत्।
यो गुरुस्स शिवः प्रोक्तो याश्शिवस्स गुरु स्मृतः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

गुरुर्वा शिव एवाथ विद्याकारेण संस्थितः।
यथा शिवस्तथा विद्या यथा विद्या तथा गुरुः॥
शिवविद्यागुरूणां च पूजया सदृशः फलम्।
सर्वदेवात्मकश्चासौ सर्वमन्त्रमयो गुरुः॥
P.L 95a. तस्मात्सर्वप्रकारेण तस्याज्ञां शिरसा वहेत्।
श्रेयोऽर्थी यदि गुर्वाज्ञां मनसापि न लङ्घयेत्॥
यो ऽह?
गुर्वाज्ञापालको यैह ज्ञानसंपत्तिमश्नुते।
गच्छन् तिष्ठन् स्वपन् भुञ्जन् नान्यकर्म समाचरेत्॥
समक्षं यदि कुर्वीत तत्सर्वं कुर्वनुज्ञया।
गुरोर्गेहे समक्षं वा न यथेष्टासनो भवेत्॥
गुरुर्देवो यतस्साक्षात् तद्गृहं शिवमन्दिरम्।
पापानां च यथा सङ्गा तत्पापफलभाग्भवेत्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

यथेह वह्निसंपर्कान्मलं त्यजति काञ्चनम्।

तथैव गुरुसंपर्कात्पापं त्यजति मानव॥

यथा वह्निसमीपस्थः शातकुम्भो विलीयते।

तथा पापं विलीयेत ध्यात्वाचार्यसमीपतः॥

यथा प्रज्वलितो वह्निः निष्ठां काष्ठस्य निर्दहेत्।

तथाऽयमपि सन्तुष्टो गुरुः पापं क्षणाद्दहेत्॥

मनसा कर्मणा वाचा गुरोः क्रोधं न कारयेत्।

तस्य क्रोधेन दह्यन्ते ह्यायुश्श्रीज्ञानसत्क्रियाः॥

तत्क्रोधकारणे ये स्युस्तेषां यज्ञाश्च निष्फलाः।

? मयाश्च नियमाश्चैव नात्र कार्या विचारणा॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

गुरोर्विरोधः यच्चान्य न वदेज्जातु तच्छिरः।
मदेद्यादि महामोहात् रौरवं नरकं व्रजेत॥
मनसा कर्मणा वाचा गुरुमुद्दिश्य यत्नतः।
श्रेयोऽर्थयेन्नरो धीमान् निर्मथ्याचारमाचरेत्॥
नैर्गुण्ये ख्यापिते तस्य नैर्गुण्यशतभाग्भवेत्।
PL.95b. गुणे तु ख्यापिते तस्य सर्वपुण्यफलं भवेत्॥
गुरोर्हितं प्रियं कुर्यात् आदिष्टो वा नरस्सदा।
असमक्षं समक्षं वा तस्य कार्यं समाचरेत्॥
इत्थमाचारवान् भक्तो नित्यमुद्युक्तमानसः।
गुरुप्रियकर शिष्य श्शैव धर्मास्ततो हितम्॥
गुरुश्च गुणवान् प्राज्ञः परमानन्दभास्करः॥
तत्त्वविच्छिवसंसिक्तो मुक्ति तेन तु चापरः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

संवित्तिजननं तत्त्वं परानतसमुद्भवम् ।

तत्तत्त्वं विदितं येन स ऽवानन्ददर्शकः ॥

न पुनर्नाममात्रेण संवित्तिरसितस्तु यः ।

अन्योन्यं तारयेन्नावं किं शिला तारयेच्छिलाम् ॥

येषान्तु नाममात्रेण मुक्तिर्वै नाममात्रका ।

यैः पुनर्विदितं तत्त्वं ते मुक्ता मोचयन्त्यपि ॥

तत्त्वहीने कुतो बोधः कुतो ह्यात्मा परिग्रहः ।

परिग्रहविनिर्मुक्तः पशुरित्यभिधीयते ॥

पशुभिः प्रेरितश्चापि पशुत्वं नातिवर्तते ।

तस्मात्तत्त्वविदेवेह मुक्तो मोचक इष्यते ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

सर्वलक्षणयुक्तोऽपि सर्वशास्त्रविदव्ययः ।
सर्वोपायविधिज्ञोऽपि तत्त्वहीनस्तु निष्फलः ॥
यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रवर्तते ।
तस्यावलोकनाद्यैश्च परानन्दोऽभिजायते ॥
तस्मादस्यैव संपर्कात् प्रबोधानन्दसंभवम् ।
गुरुं तमेव वृणुयान्नापरं मतिमान्नरः ॥
स शिष्यैर्विनयाचारैश्चतुरैर्विनयो गुरुः ।
यावद्विज्ञायते तावत्सेवनीयो मुमुक्षुभिः ॥
P.L.96a. ज्ञाते | तास्मिन् स्थिरा भक्तिर्यदि स्यात्तं समाश्रयेत् ।
न ततस्तं त्यजेद्वेकं नोपेक्षेत कथञ्चन ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

यत्रानन्दप्रबोधा वा नाल्पमप्युपलभ्यते।
वत्सरादपि शिष्येण सोऽन्यं गुरुमपाश्रयेत्॥
गुरुमन्यं प्रपन्नोऽस्मि नावमन्येत पौर्विकम्।
गुरोः भ्रातॄस्तथा पुत्रान् बोधकान् प्रेरकानपि॥
तत्रादन्यपसंगम्य ब्राह्मणं वेदपारगम्।
गुरुमाराधयेत्प्राज्ञं सुभगं प्रियदर्शनम्॥
सर्वाभय प्रदातारं करुणाक्रान्तमानसम्।
तोषयेत्तं प्रयत्नेन मनसा कर्मणा गिरा॥
तावदाराधयेच्छिष्यः प्रसन्नोऽसौ भवेद्यदा।
तस्मिन् प्रसन्ने शिष्यस्य सद्यः पाशक्षयो भवेत्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

तस्माद्धनानि रत्नानि क्षेत्राणि च गृहाणि च।
भूषणानि च वासांसि यानशय्यासनानि च॥
एतानि गुरवे दद्यात् भक्त्या वित्तानुसारतः।
वित्तशाठ्यं न कुर्वीत यदिच्छेत्परमां गतिम्॥
स एव जनको माता पिता बन्धुर्धनं सुखम्।
सखा मित्रं च यस्मात्तत्सर्वं तस्मै निवेदयेत्॥
निवेद्य पश्चात् स्वात्मानं सद्रव्यं सपरिच्छदम्।
समाप्य सोदकं तस्मै नित्यं तद्वशगो भवेत्॥
यदा शिवाय स्वात्मानं दत्तवान् देशिकात्मने।
तदा शैवो भवेद्देही न तस्यास्ति पुनर्भवः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

दैशिकाकृतिमास्थाय पशोः पाशानशेषतः।
छित्त्वा परं परं देवो नयत्येनमिति श्रुतिः॥

PL. 36 b. गुरुश्च स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत्।
ब्राह्मणं क्षत्रियं वैश्यं द्विवर्षं च त्रिवर्षकम्॥

प्राणद्रव्यप्रदानाद्यैरादेशैश्च समासमैः।
उत्तमांश्चाधमे कृत्वा नीचाननुत्तमकर्मणि॥

आदिष्टास्ताडिताश्चापि ये विषादं न यान्त्यपि।
ते योग्यास्संगताश्शुद्धाश्शिवसंस्कारकर्मणि॥

अहिंसकादयावन्तो नित्यमुद्युक्तचेतसः।
अमानिनो बुद्धिमन्तस्त्यक्तस्पर्धाः प्रियंवदाः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

२५

ऋजवो मृदवःस्वच्छ विनीता स्थिरचतसः।
शौचाचारसमायुक्ता शिवभक्ता द्विजातयः॥
एवं वृत्तसमोपेतं वा मनःकायकर्मभिः।
शोध्या बोध्य यथान्याय्यं इति शास्त्रेषु निर्णयः॥
नाधिकारः स्वतो नार्याःशिवसंस्कारकर्मणि।
नियोगाद्भर्तुरस्यैव भक्तियुक्ता यदीश्वरे॥
तथैव भर्तृहीनायाः पुत्रादेरप्यनुज्ञया।
अधिकारो भवत्येव कन्यायाःपितुराज्ञया॥
शूद्राद्विनान्यजातीनां पतितानां विशेषतः।
तथा संस्कारजातीनां नाध्वशुद्धिर्विधीयते॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

तेऽप्यकृत्रिमभावाश्चेत् शिवे परमकारणे ।

पादोदकं प्रदास्येभ्यः कुर्यात्पाशविशोधनम् ॥

अत्रानुलोमजाता ये युक्ताश्च द्विजातिषु ।

तेषामध्वविशुद्ध्यादि कुर्यान्मातृकुलोचितम् ॥

या तु कन्या स्वपित्राद्यैः शिवधर्मे नियोजिता ।

सा भक्ताय प्रदातव्या नापन्नाय विरोधिने ॥

प्रत्ता चेत्प्रतिकूलाय प्रमादाद्बोधयेत्पतिम् ।

PL. 97a. अशक्तौ तं परित्यज्य मनसा | धर्ममाचरेत् ॥

? यथा पुरमुनत्यक्त्वा पतिममन्त्रं पतिव्रता ।

कृतकृत्याभवत्पूर्वं तपसाराध्य शंकरम् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

यथा नाळो धनी देवं तपसाराध्य पाण्डवान्।
पतीन् लब्धवती धर्मे गुरुभिर्न नियोजयेत्॥
अस्वतन्त्रकृतो दोषो नेहास्ति परमार्थतः।
शिवधर्मे नियुक्तत्वात् शिवशासनगौरवात्॥
बहुनात्र किमुक्तेन योऽपि कोऽपि शिवाश्रितः।
संस्कारो गुर्वधीनश्चेत् संस्क्रियात्तु प्रमियते॥
गुरोरालोकनादेव स्पर्शात्संभाषणादपि।
यस्य संज्ञायते ह्यज्ञ तस्य नास्त्यपरक्रिया॥
मनसा यस्तु संस्कारः क्रियते योगवर्त्मना।
सस्नेह कथ्यते गुण्यो गुरुवक्रैकगोचरः॥
क्रियावान्यस्तु संस्कारः कुण्डमण्डलपूर्वकः।
स वक्ष्यते समासेन तस्य शक्यो न विस्तरः॥

इति वायुसंहितायां त्रयोदशाध्यायः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

॥ सुप्रभेदे सान्निध्यलक्षणम् ॥

सुप्रभेदे मण्डलविधान पटले —

शिष्यान् संवत्सरात्पूर्वे परीक्ष्य च गुणागुणान्।
गुणयुक्तांश्च संगृह्य गुणहीनान्विसर्जयेत् ॥
अङ्कुरान्यर्पयित्वा तु पूर्वोक्तविधिनैव तु।

इति सुप्रभेद शिष्यावेधिः ॥

सोमशम्भुः - आचार्यगुणम् —

इत्थं लब्ध्वाधिकारेण दीक्षाचारेण साध्यते।
स च सद्देशसंभूतस्समूर्ति श्रुतशीलवान् ॥
ज्ञानाचारगुणोपेतः क्षमा शुद्धाशयो वरः।

शिष्यः —

मधुलुब्धो यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत्।
P.L.37h. ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25 यदा हीनस्त्यजेद्दृशां कृपाहीनं त्यजेन्नृपम्।
त्यजेत्क्रोधमुखं भार्यां ज्ञानहीनं गुरुं त्यजेत्॥
दयाशील गुणाचारो गुरुभक्तिसमन्वितः।
शिवानुध्यानवान् शिष्यो विरक्तश्च प्रशस्यते॥

26 तत्त्वप्रकाशिकाव्याख्याने मृगेन्द्रवचनम्

मललक्षण ...

आणवमललक्षणम् —

तदेकं सर्वभूतानां अनादि निबिडं महत्।
प्रत्यात्मस्थ स्वकालान्तापायशक्ती समूहवत्॥

मतङ्गे — ताम्रकालिकवद्योगात्सहजं परिकीर्तितम्।
मोहो मदश्च रागश्च विषादश्शोक एव च॥
वैचित्र्यं चैव हर्षाख्यं सप्तैते सहजा गुणाः।

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

26

आणवमलस्य नाम मृगेन्द्रे —

मलश्चाशुद्धिरज्ञानं तच्चैतन्यनिरोधकम्।
अविद्यावृत्तिरज्ञानं पशुत्वं चाणवं तथा॥
प्रोक्तं पशुमलं चेति सहजं मूलकं मलम्।

=.

सुप्रभेदे —

मलोऽज्ञानं तमश्चैव तिरस्कारकरं तथा।
प्रतिपत्तिरविद्येति मलपर्यायवाचकाः॥

=.

पाशलक्षणम् —

मलं कर्म महामाया मायोत्थमखिलं जगत्।
तिरोधानकरी शक्तिः पाशत्वेनार्थपञ्चकम्॥

इति मललक्षणम्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

२६ मृगेन्द्रव्याख्याने

मलस्य पर्यायवचनम् —

पशुत्व पशु नीहारमृत्युमूर्च्छामलाञ्जनैः ।

अविद्यावृत्तिरुक्तानि पापमूलक्षयादिभिः ॥

=

पाशा अपि त्रयो ज्ञेया मलो माया च कर्म च ।

मलश्चाशुद्धिरज्ञानं तच्चैतन्यं निरोधकम् ॥

PL.98a. माया कला|दिपर्यन्तं तद्भवा तत्त्वसंहतिः ।

धर्माधर्मात्मकं कर्मेत्येतैः पाशैर्युतः पशुः ॥

पाशोरज्ञा तया माया योगो भोगश्च कर्मणा ।

समयादीश्वरोज्जातो मूर्तिन्यासविधायितः ॥

ततस्सुखादिकं कृत्वा भोगभुक्ते स्वकर्मतः ॥

महामायातिरोधायीत्येवं पञ्चमलान्विदुः ।

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

26

आणवस्य गुणाश्चाष्टौ वृष्टिसंख्यां च मायिकम्।
निश्चयः कोपसंयुक्तमिच्छा विकलमेव च॥
कुलाहंकारनामत्वं अभयमष्टगुणं भवेत्।

॥ इत्याणवस्याष्ट गुणाः॥

मायायास्सप्तगुणा उच्यन्ते —

पाणवा च विरुद्धं च गुरुलङ्घनमेव च।
कृतघ्नोऽनलसंयुक्तं यथा साम्य कृतथैव च॥
गुणास्सप्तेति च प्रोक्ता मायायाः परिकीर्तिताः।
कृपणास्तस्करं चैव सत्यानन्द इति स्मृताः॥
मत्तो वहृमिति प्रोक्ता ख्याताः काम्यस्य षड्गुणाः।
मत्ते चतुष्टये कर्ता तिरोभावस्य सत्कृतिः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

26

कलाद्विद्वत्तं च तदेव नूनं
तदेकतैकस्य स्थितं मयाधिकम्।
मल्लाचतुष्कं जलमेन लेपनं
प्रक्षाळनं वस्त्रमलं तथाकृतम्॥
पाशलक्षणमित्येवं पश्चाच्छक्तिनिपातनम्।

मृगेन्द्रव्याख्याने —

इदानीं तु पाचयन कर्मकर्मैत्युक्तं
निर्वर्णयितुमाह —
तथा बीजशरीरादेः पाचयन्त्य निवेशनात्
भगवतश्शक्तयस्सर्व कार्येषु ... पृथुताः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

26

PL98b. ताभिश्शरीरेन्द्रियजात्यायुर्भोगकारणः।

तत्कर्मदेहभाजां तत् स्वा··· वाचयति।

फलदानोन्मुखमापादयति यस्मात् न

योग्यताङ्कमभजन् सद्यस्यादौषधिवत्।

योग्यताया अर्हत्वस्या संपादकं पाकाख्य-

संस्कारमभजत्। अनया सेव्यमानं तत्कर्म

सद्यस्तत्क्षणं हरीतक्या दौषधमिव

न स्यान्न भवेत्। फलदामिति शेषः।

यदाहुः — अप्राप्तपाकं हरीतक्यादि-

द्रव्यं सदापि कार्यसंपादनासक्तम्।

योग्यताङ्कस्य पाकस्यानासनादिति।

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

26

एवं सदपि कर्म पक्वं तत्फलदानाशक्तम्।

? अतः पक्षकापेक्ष्य। पाकश्चास्य न स्वतस्संभवतीत्याह — "पाकार्हमपि तद्भुक्तेनेशक्त्यात्मनात्मना। धर्मस्सामान्य एवायं सर्वस्य परिणामिनः॥" पाकयोग्यमपि तत् स्वयमात्मानमात्मना न पाचयितुमीशम्। सर्वं हि परिणामिनो वस्तुनः क्षीरादेरिवायं साधारणो धर्मः। यत् किमप्यपेक्ष्य परिणामित्वं नान्यथा। परिणामित्वाच्च कर्मणोऽप्यन्यापेक्षो विपाकः। अनेन मायाशक्त्याः पाके योग्याः प्रकुर्वन्नित्येतदपि प्रकाशितम्।

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

२६

तस्यापि परिणामित्वात्। नचैषां मलमाया-

कर्मणां परिणामकत्वमनीशेन सुशकमित्युक्तम्।

ईशतीत्यदुष्टम्। ईश इवाचरतीति सर्व-

सर्वप्रातिपदिकेभ्य इत्येक इति स्मरणात्।

तदीयता तावत् सर्वकर्तृत्वं परमेश्वरस्य

प्रतिपादतः। अत एवा चास्य सर्वज्ञत्वं

P.199a सिध्यतीत्याह —

॥ इति मलपरिपाकविधिः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

26

मृगेन्द्रमूलवचनम् —

स्वाक्ष्यास्ते बोधयन् बोधयोग्यान्

? न्रोध्यान्नृन्धन् पाचयन् कर्मिकर्म ।

मायाशक्तिर्व्यक्तियोग्या प्रकुर्वन्

विपश्यत्सर्वं यद्यथावस्तुजातम् ॥

= शक्तिपात ?

27 मृगेन्द्रे तिरोधानशक्तिलक्षणम् —

तासां माहेश्वरी शक्तिस्सर्वानुग्राहका शिवा ।

धर्मानुवर्तनादेव पाश इत्युपचर्यते ॥

? परिणामवती सा च रोधान्तकात् ऋत्विषा ।

यदोन्मीलनमाधत्ते तदानुग्राहिकोच्यते ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

२१

वायवीयसंहितायाम —

या यस्यां निर्वृतस्स्वयस्सैव तीव्रतरा मता।
तीव्रा तु जीवतोऽत्यन्तं पुंसां पापविशोधिका॥
शक्तिर्ज्ञानवती दीक्षा शिष्यदेहं प्रविश्य तु।
गुरुणा योगमार्गेण क्रियते ज्ञानचक्षुषा॥
मान्त्री क्रियावती दीक्षा कुण्डमण्डलपूर्विका।
मन्दमन्दतरोद्देशात् कर्तव्या गुरुणा बहिः॥
शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति।
शिवधर्माधिकारस्य तन्मूलत्वात्समासतः॥
यत्र शक्तिर्न पतिता तत्र शुद्धिर्न जायते।
न विद्या नं शिवाचारो न मुक्तिर्नत्र्य सिद्धये॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

27

तस्माल्लिङ्गानि सँवीक्ष्य शक्तिपातस्य भूरिशः।

ज्ञानेन क्रियया वाथ गुरुशिष्यं विशोधयेत्॥

योऽन्यथा कुरुते मोहात् स विनश्यति दुर्मतिः।

तस्मात्सर्वप्रयत्नेन गुरुशिष्यं परीक्षयेत्॥

लक्षणं शक्तिपातस्य प्रबोधानन्दसँभवः।

PL99b. सा यस्मात्प्रथमा शक्तिः | प्रबोधानन्दरूपिणी॥

आनन्दबोधयोर्लिङ्गं अन्तःकरविक्रिया।

यया स्यात्कम्परोमाञ्चस्वरनेत्रादिविक्रिया॥

शिष्योऽपि लक्षणैरेभिः कुर्याद्गुरुपरीक्षणम्।

॥ इति शक्तिपातविधिः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

27

## मृगेन्द्रे शक्तिनिपातः =

मृगेन्द्रे —

येषां शरीरिणां शक्तिः पतत्यहिनिवृत्तये।

तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ द्वेषो भवस्थितौ॥

शक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके विधौ।

—

मतङ्गसूत्रे —

तन्निपाते च्च तस्योर्थ मज्ञस्याप्यभिलाषतः।

बुद्धिरुत्पद्यते तस्माद्विवेकेनात्मवर्तिना॥

विवेकिने विरक्तस्य जिज्ञासा चोपजायते।

जिज्ञासोपेतचैतन्यं पशुं संसारसागरात्॥

जीप्रक्षया युनत्त्येनं युक्तं प्रेरयिता प्रभुः।

प्रेरणे प्रेरकः श्रीमान् द्वयोरपि स मन्त्रराट्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

२७ अनुग्राह्या स्वविनये तथानुग्राहकस्य च।
कारुण्यत्वे तयोर्यस्मात् तयोर्योग्य स दुर्लभः॥
स देशिकमनुप्राप्य दीक्षाविच्छिन्नबन्धनः।
प्रयाति शिवसायुज्यं निर्मलो निरुपप्लवः॥
॥ इति शक्तिपातयुक्तार्थः॥

पराख्ये —

स्वल्पैर्भिर्व्यज्यते स्वल्पं महा महति तत्स्थितम्
यादृक् तादृक् भवेत्तस्य प्रदीपस्तिमिरे यथा॥

निश्वासकारिकायाम् —

सचेतनः स्मृतो जीवो यदा शक्त्यनुयुज्यते।
अन्यथा निष्कलो ह्यात्मा विषसिप्तेव लक्षिते॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

P.L. 100a <u>किरणे</u> – गुरुर्यथागतशिष्यान् सुप्तान् दण्डेन बोधयेत्।

शिवोऽपि मोहनिद्रायां सुप्तान्छक्त्या प्रबोधयेत्॥

यथा भेषजसामर्थ्यात् अशक्तानां बलं वरम्।

तेन तच्छक्तियोगेन सामर्थ्यमिति तं भवेत्

पौष्करे –

पुरुषोपरि यन्तत्त्वं शिवतन्त्रैकगोचरम्।

पुंसां तन्निश्चिता न स्याच्छिवानुग्रहादृते॥

तस्मादनुग्रहेच्छाक्तिः पतिता बोधयन्त्यणून्।

शिवदीक्षादिनोद्भूतामम्लं सर्वतोमुखम्॥

शिवत्वोन्मीलितं ज्ञानं शिवशक्त्यात्मकं भवेत्।

श्रेयः प्रकाशकश्शैवे न तु बुद्धिः प्रकाशिकाः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

77

शक्तिपात (3)? मृगेन्द्रे —

ज्ञानं क्रियाच चर्याच योगश्चेति चतुष्टयम्।
ज्ञानात्सायुज्यमाप्नोति योगात्सारूप्यमेव च॥
सामीप्यं क्रियया चैव सालोक्यं चरिताफलम्।
चतुष्पादमिति ख्याते शक्तिपातस्य लक्षणम्॥
धर्माधर्मात्मकं योग निष्कळं तु परं शिवम्।
देशिकं रूपमास्थाय चतुर्थ्या शक्तिपातनम्॥
मन्द मन्दतरं चैव तीव्रतीव्रतरं तथा।
अनुलोमश्च सम्मार्जं दीपमाला च तीर्थकम्॥
स्तोत्रं च तर्पणं नृत्तं कृत्वा तु शिवकीर्तनम्॥
इत्युक्तलक्षणाद्दीक्ष्य शिवलोके प्रवेशनम्॥
5 तत्सालोक्यमित्युक्तं शिवचर्याफलं भवेत्।

———

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

२7

क्रियाविधिः —

निर्बीजदीक्षितप्रोक्तं समयेन तु चिन्तितम् ।

सप्तकोटिमहामन्त्र निर्बीजाभ्यासनं भवेत् ॥

समयाद्देहशुद्धिस्स्यात् विशेषाद्दात्मशुद्धिदम् ।

निर्वाणदीक्षया चैव सायुज्यं तदिहोच्यते ॥

P.L.100b. सामीप्यं समयात्प्रोक्तं सारूप्यं तु विशेषतः ।

निर्वाणदीक्षया प्रोक्तं सायुज्यं शिवभोगदम् ।

—

भूतात्मा चैव जीवात्मा मुक्तात्मा च ततःपरम् ।

परमात्मा विशात्मा च पञ्चात्मानः प्रकीर्तिताः ॥

भूतात्मा स्थूलदेहश्च जीवात्मा सूक्ष्मदेहकः ।

विद्यादेहस्तु मुक्तात्मा प्रणवः परमात्मगाः ॥

शिवात्मा दृक्क्रियारूपः पञ्चात्मानः प्रकीर्तिताः ।

आत्मानञ्चान्तरात्मानं परमात्मानमेव हि ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

27

तत्त्वात्मा चैव भूतात्मा आत्मभूताः प्रकीर्तिताः।
आत्मानं दण्डमत्यर्थं अन्तरात्मा च तद्वयम्॥
परमात्मात्ममध्यस्थं तत्त्वात्मा पार्श्वदक्षिणे।
भूतात्मा वामपार्श्वे तु पञ्चधात्मस्वरूपकम्॥
भूतात्मा योजयेद्विद्वान् अन्तरात्मा दहेत्पुनः।
तत्त्वात्मा अमृतं पूर्य शुद्धात्मा बोधयेद्बुधः॥
विद्यादेहं तु सालोकं मुक्तात्मा शिवरूपकम्।
अन्तर्बहिस्समभ्यासं शक्तिरूपं तथा भवेत्॥
तत्त्वयुक्तं दशे शुद्धिं दशांशं दश पूजकम्।
मनोध्यानाङ्गकर्माभ्यां कृत्वाचमनवाक् बुधः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

27

विशेषश्च सबीजेन मन्देतरविलक्षणम्।

शिवेकाशास्थितं चैव पृथ्व्यादिकुटिलान्तकम्॥

समीपप्रणवं देहं परा त्मा शिवदर्शकम्।

समयं विशेषतद्योगमष्टयोगेन संयुतम्॥

शिवं तथाविधं प्रोक्तं सारूप्यध्यानमेव च।

सारूपं हृत्क्रियादेहं शिवात्मा शिवयोगतः॥

शिवयोगमिति प्रोक्तं तीव्रलक्षणमुच्यते।

आत्मनो लक्षणं रूपं स्वरूपं तत्त्वदर्शनम्॥

P 101a रूपदर्शन|शुद्धिं च मलो मायाच कर्म च।

तत्त्वलक्षणरूपादि दर्शनं शुद्धिरुच्यते॥

शिवलक्षणरूपं च स्वरूपं दर्शयोगकम्।

शिवयोगं तथाभ्यासं इति तीव्रतरं भवेत्॥

॥ इति शक्तिनिपातलक्षणम्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

अजिते शिवदीक्षा

~~[illegible]~~

चतुर्था शक्तिपातोऽयं शिवमोक्षफलं प्रति।
तत्र मन्दतरो मन्दस्तीव्रस्तीव्रतरस्तथा॥
रोमाञ्चश्चैवकं पश्चात् मूर्छा मोक्ष चतुर्विधम्।

संहारे भुवनेश्वरा हरि तथा ब्रह्मा च तत्प्रापिणे
विज्ञाना कलिता प्रयान्ति पुरतः काले तदात्वेऽपि ये।
रुकूपाके स्वपदोञ्छया विरहिताः शर्वस्य तेऽनुग्रहा
मुक्ता स्यु स्वपदं ददात्यापि परे तत्तत्परन्ते परे॥ (26)

विश्रान्त्यै भविनां च खिन्नमनसां पाकाय कर्माविले *
माया वाक् बलसंभवाय कुरुते शम्भुर्महासंहृतिम्।
क्षिप्यन्ते पशवस्स शक्तिरमलश्शम्भुश्च मायाद्विधं
सृष्ट्वा द्यन्त यथा ततश्च कुरुते भोगाय पुंसां पुनः॥ (27)

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

28

இனி மேல் சக்திநிபாதத்துக்கு - मूले —

कालेन पक्वे पतति नरवरे शक्तिरार्द्रा भवेऽस्मिन्

देष्टो निश्रेयसोऽस्य गुरुवरभजनं तद्गतेशस्य होत्र्या ।

पाशान्संछिद्य शक्त्या नियाति शिवपदं व्यञ्जयंस्तच्छिवत्वम्

दीक्षापूतोऽङ्ग पाशक्षयकरसमयाचारमेषोऽनुतिष्ठेत् ॥ 28

स्वाम्नाय ज्ञान सिद्धाचरण विकलं चाचरन् विप्लुतोऽतं

निष्कृत्या सो मृतोऽन्ते शिवनिहितमनाश्चान्ययागाच्छिवत्वम् ।

P.L.101 b. लब्ध्वा व्याप्ताप्य विश्वं परशिवसमो नीशितस्तेन शक्तो

नैजाहादैकपूर्णो निखिलपरिवृतशंकरप्रीतिरास्ते ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

अत्यर्थं तीव्रपाके रुजि च भवमहाक्लेशदेर्व्यादितस्सन्
शम्भोर्मुक्तिः कदेति स्वतनुवितरणे निस्पृहोऽन्ये विचिन्वन् ।
मां कोऽस्मादत्र शक्तिश्शिवपदमतुलं योक्तुमित्याकलय्य
प्राप्यैवं छिन्नपाशः स्वतनुविरहतो याति सद्यश्शिवत्वम् ॥ (30)

मन्दाद्यैः केऽपि पक्वे तमसि च समथा संस्कृतिं तद्विशिष्टां
लब्ध्वा लिङ्गार्चनाद्यैर्न पतितनवे रुद्रमैशं पदं च ।
लौकिक्या योजिता ये पतिसुयजनतः प्रेत्य भुक्त्वेव लोके
वैराग्याद्दीक्षितास्ते भुवनजगुरुभिर्यान्ति साक्षाच्छिवत्वम् ॥ (31)

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

नानावैकल्यहीनां शिवपदविषयां प्राप्य दीक्षान्तमूर्ध्वं
चर्यामीशस्य भक्त्या भुवि चरति च यो याति तद्विप्लुतिश्चेत् ।
अन्ते क्रव्यादवाप्त्या शतल वितति स्याद्भुक्तितोऽन्ते शिवत्वं
दीक्षावैकल्ययुक्ताः समयनिपतिता स्सद्विहीना न यान्ति ॥

वात्सल्यं शिवभक्तपादकमले शम्भोस्समाराधयन्
नेत्राङ्ग स्वरविक्रिया शिवपदकथास्वत्यादरस्तत्स्मृतिः ।
तत्कैङ्कर्यसमस्तदीयचरणे तद्द्रव्यसंरक्षणे
भक्तिस्तत्कृतिमोदनं पतितया शक्त्या भवेदीशितुः ॥



Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

28

## शिवदीक्षादेशनिर्देशः

अजिते —

मेरुमन्दरकैलासशिखरेषु सधातुषु ।
PL.102 a. श्रीपर्वते देवगुरौ महेन्द्रे गन्धमादने ॥
गरिष्ठे तेषु चान्येषु पुण्यतीर्थयुतेषु च ।
तथा भूतेष्वरण्येषु गङ्गातीर्थयुतेषु च ॥
यमुनायास्सरस्वत्या गोदावर्यास्तटद्वये ।
नदीनदानामन्यानां पुण्यानां तीरयोरपि ॥
मानसादिसरस्तीरे ह्रदानां महतामपि ।
समुद्रतीरे सर्वत्र पुण्यक्षेत्रसमीपतः ॥
सर्वक्षेत्रेषु पुण्येषु कुरुक्षेत्रमुखेऽपि च ।
अण्यन्कादिषु सर्वेषु पुण्यस्थानेषु वै च हि ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

28

गोष्ठे देवालये वाऽपि गुरूणामाश्रमेषु च।

उद्यानेषु च रम्येषु सिद्धक्षेत्रेषु वा पुनः॥

मुनीनामाश्रमे रम्ये वानप्रस्थाश्रमेषु च।

विपुलकुमुदपद्मप्रान्तविस्तीर्णतोय-

प्रचुरविततवीचिचक्रसंश्लेषरम्ये।

मृदुतरबहुपुष्पास्वादबन्धोदराणां

सततवसतिभूते चोत्सुकानां मृगाणाम्॥

अरुणकुमुदनीलनीरजाद्यै-

रपि समलंकृतपुण्यतोयसिक्तैः।

फलकुसुमफलावनम्रशाखै-

स्तरुविसरैर्बहुभिस्सदाधिरूढे॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

28

यत्र पुष्पलतागुल्माः पुष्पस्तबकसंकुलाः ।
श्लक्ष्णच्छायायुता श्लक्ष्णः कल्पपल्लवशाखिनः ॥
हृष्टपुष्टविहङ्गाश्च सदापानजलाश्रयाः ।

तत्रोपविष्टवरशाखिकलान्यपुष्टे
फुल्लोरुकैरवदलद्युतिनीलभृङ्गे ।
कूजत्कलापिकुलशालिनि वृक्षमूले
सुप्तप्रबुद्धरुरुमण्डलमार्जिते च ॥

PL 102 b. उत्फुल्लस्थलकमले / मनोमनोज्ञे
विस्तीर्णे विततसरित्तटाककुल्ये ।
आलोलमृदुकुशकाशशोभिवीरुत-
पर्यन्तोन्मुखवृषगोकुलैश्च रम्ये ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

२४

आलोलद्भिकचमहोत्पलावलीषु-
च्छायद्भिः पतदलिभिः कपोतशोभे ।
हंसानामपि मिथुनैश्च चक्रनाम्नां
संकीर्णामलसलिले ससारसानाँ ॥

एवं भूते दैशिकचारुदेशे
कुर्यान्नृणां सर्वतश्चार्थसिद्धिम् ।
- - - - - - - - - - - -
- - - - - - - - - - - - - ॥

इत्यजिते देशनिर्देशविधिः ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25



[मकुटे] —

अथ दीक्षाविधिं वक्ष्ये सर्वसिद्धिफलप्रदम्।
अपमृत्युजयं चैव त्वायुरारोग्यवर्धनम्॥
दीयते च शिवत्वं हि क्षीयते पापसञ्चयम्।
क्षयात्पापस्य शैवत्वात् दीक्षा चेत्यभिधीयते॥
महेन्द्रे मलये विन्ध्ये हिमवत्पारियात्रके।
गङ्गातीरे सरित्पुण्ये समुद्राश्रयकेऽपि वा॥
पुष्पोद्यानेऽथवा शुद्धे जलेश्वरसमीपके।
देवालये महास्थाने दक्षिणद्वारकालये॥
कुन्दवृक्षे गवां स्थाने दीक्षास्थानं प्रकल्पयेत्।
दीक्षास्थानविधिप्रोक्तो दीक्षाकालविधिं शृणु॥

देशनिर्देशः मकुटे ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in
accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

28

(सुप्रभेदे) –

महेन्द्रे मलये विन्ध्ये हिमवत्पारियात्रके।
गङ्गातीरे सरित्पुण्ये समुद्राश्रयकेऽपि वा॥
पुष्पोद्यानेऽथवा नित्यं क्षीरवृक्षसमीपके।
शुद्धदेशे मनोरम्ये गृहे देवालयेऽपि वा॥
प्रागुदक्प्रणवे देशे मण्डलं वा लिखेद्बुधः।

इति सुप्रभेदे देशनिर्देशविधिः॥

P.L.103a. सुप्रभेदे दीक्षार्थमण्डलपटले काल|निर्णयः॥

सुप्रभेदे दीक्षाकालः

सप्तम्यां च नवम्यां च एकादश्यां त्रयोदशि।
नक्षत्राणि शुभान्याहुः आदित्ये सोमवारके॥
गुरुशुक्रे तु सूनूनां दीक्षाकर्म सुशोभनम्

इति सुप्रभेदे कालविधिः

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

28

## काश्यपीये कालविधिः॥

अल्पदोषं गुणाधिक्यं दिनं लग्नं च संग्रहेत्।
अनेककोटिदोषाढ्यं दिनं चेद्धनमेव वा॥
दोषहीनतमं याति जीवदृष्ट्या द्विजोत्तम।
अनेककोटिदोषस्तु जीवेनैकेन नश्यति॥
तमांसीवामितं रात्रौ नश्यन्ति रविणा यथा।
तथैव जीवदृष्ट्या तु सर्वदोषास्समुज्झिताः॥
एवं परीक्ष्य बहुधा कर्षणादीनि कारयेत्।

इति काश्यपीये कालविधिः

---

अजिते - -

उत्तरायणकाले तु माघमासविवर्जिते।
शुक्लपक्षे द्वितीया च तृतीया पञ्चमी तथा॥
षष्ठी च सप्तमी चापि दशमी च त्रयोदशी।
तिथयश्शुभदाः प्रोक्ता दिनपूर्वार्ध इष्यते॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

श्रेष्ठा वारा गुरुज्ञेषु (न्दु) शुक्राणां परिकीर्तिताः।

पक्षच्छिद्रां सपर्वां च रिक्तां चापि विवर्जयेत्॥

कोणाङ्गारदिनेशानां वारांश्चापि विवर्जयेत्।

प्राजापत्यैन्दवं शिष्यमार्द्रा स्वाती पुनर्वसूः॥

आश्विनं रेवती हस्ता चोत्तरत्रितयं तथा।

मैत्रं वैष्णव संयुक्तं नक्षत्रं शुभदं स्मृतम्॥

अन्धकारं च वर्ज्यं स्यात्कुण्टकं स्थूणमेव च।

पापयुक्तं तथा दृष्टं विद्धं काङ्क्षितमेव च॥

कं?

RL 103b सव्यतीपातबं चैव वर्जनीयं प्रयत्नतः।

द्रेक्काणांशकहोराख्य दर्शनं शुभदं स्मृतम्॥

इत्याजिते कालविधानविधिः

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

कारणे —

पूर्वभाद्रपदे माघे चाषाढे मार्गशीर्षके।
दीक्षां न कारयेद्धीमान्नान्यमासेषु कारयेत्।
शुक्लपक्षे शुभर्क्षे तु शुभवारादिभिर्युते॥
सोमो बुधो गुरुश्शुक्रः शुभाश्च परिकीर्तिताः।
एषां वारेषु कर्तव्यं दीक्षाकर्म विशेषतः॥
पूषा च रोहिण्यदिति श्रवणं चाश्विनी मघाः।
सावित्री त्वाष्ट्रवायव्ये नैर्‌ऋतं मैत्रमेव च॥
तिष्य त्रीण्युत्तरार्द्रा च ह्यत शिष्य त्रिजन्मकम्।
नक्षत्राणि प्रशस्तानि दीक्षाकर्मणि सुव्रत॥
राशयश्च चरा श्रेष्ठा मध्यमाश्चोभयाः स्मृताः॥
स्थिराश्च नैधनस्थाने ग्रहास्सर्वे विवर्जयेत्।
आचार्यशिष्ययोरानुकूल्यादि शुभदं भवेत्॥
अङ्कुराण्यपि यो धीमान् प्रागुक्तविधिना सह।

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

मकुटे —

उत्तरायणकाले तु शुक्लपक्षसमन्विते ।
अयने विषुवे चैव ग्रहणे सोमसूर्ययोः ॥
सर्वमासेषु कर्तव्यमाचार्ये च नक्षात्क्रमात् ।
सुमुहूर्ते सुलग्ने च दीक्षाकर्म च कारयेत् ॥
शिष्याणां वत्सरात्पूर्वे परीक्ष्य च गुणागुणान् ।

═

वासिष्ठे सूर्यवारादौ नक्षत्रयोगविधिः ।

अथातः सँप्रवक्ष्यामि वारनक्षत्रयोः फलम् ।
PL. 104a. योगे शुभाशुभं ज्ञात्वा सर्वकर्माणि | कारयेत् ॥

सूर्यवारे —

उत्तरत्रयरोहिण्यो हस्तश्रवणरेवती ।
पुष्यस्वात्य सुराण्यर्के सर्वकर्माणि कारयेत् ॥
मृगशीर्ष मखाज्येष्ठा विशाखा भरणी तथा ।
अनुराधाश्च सूर्येण सर्वकर्माणि वर्जयेत् ॥

═

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

सोमवारे =

श्रवणं पुष्यरोहिण्यौ अदितिस्सौम्यतारकम् ।
सोमस्य दिवसे युक्तं सर्वकर्मसमृद्धिदम् ॥
विशाखाशिमखापौष्णमाषाढं मैत्रमेव च ।
अभिजित्सोमवारेण सर्वकर्मविनाशनम् ॥
=

कुजे =

पूर्वोत्तरारव्य फाल्गुन्यौ रोहिणी चाश्वरेवती ।
अङ्गारदिवसे युक्तं सर्वकर्मसमृद्धिदम् ॥
श्रवणं पूर्वभाद्रं च स्वाती ज्येष्ठा विशाखकम् ।
धनिष्ठा च दिनेऽङ्गारे सर्वकर्मविनाशनम् ॥
=

बुधवारे —

पूर्वोत्तरारव्य फल्गुन्यौ उत्तराषाढ कृत्तिके ।
मृगशीर्षमनूराधा बुधवारे समृद्धिदम् ॥
बुधे मूलभ रेवत्या अश्विनी भरणी तथा ।
पूर्वभाद्रा धनिष्ठा च सर्वकर्मविनाशनम् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

गुरुवारे =

पूर्वफल्गुनि पुष्याश्वी मघा स्वाती च रेवती ।
पुनर्वसू गुरोर्वारे जनानां सिद्धिदं स्मृतम् ॥
बृहस्पतिदिने चान्द्र तारमुत्तरफल्गुनी ।
शततारकरोहिण्यौ सर्वकर्मविनाशनम् ॥

शुक्रवारे

पूर्वभद्रार्यमा सौम्यं हस्त श्रवण रेवती ।
शुक्रस्य दिवसे युक्तं योगोऽयममृतं भवेत् ॥
P.L104 h. विशाखा सर्पमैत्राणि धनिष्ठातिष्यरोहिणी ।
चित्रा च पितृदैवत्यं शुक्रवारे विवर्जयेत् ॥

मन्दवारे -

कृत्तिकाश्विनिरोहिण्यौ शततारानिलं तथा ।
अर्कजे दिवसे युक्तं योगोऽयममृतं भवेत् ॥
पुनर्वसू मघा श्चापि रेवत्युत्तरफल्गुनी ।
सावित्रं श्रवणं चैव शनिवारे विवर्जयेत् ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

25

## कामिके दीक्षाकालः

अथ कालं प्रवक्ष्यामि सर्वेषां तु सुखावहम्।
माघमासं विना शस्तं भानोरयनमुत्तमम्॥
दक्षिणायनमासानां कार्तिकाश्वयुजावपि।
श्रावणं च विधीयन्ते तदन्ये निन्दिता मताः॥
शुक्लपक्षे शुभेऽन्यस्मिन् सप्तम्यान्तं तथा शुभम्।
तत् शुक्लाद्य तृतीयांशं कृष्णे चान्त्यं च संत्यजेत्॥
मध्यमे मध्यगौ भागौ श्रेष्ठावन्त्यौ प्रकीर्तितौ।
नवमी पञ्चदश्यौ च हित्वा युग्मेऽन्तरां तिथिम्॥
आद्यामपि तथा युग्मे द्वितीया दशमी तथा।
कृष्णे षष्ठीं च याश्शिष्टास्तास्सर्वाश्च विनिन्दिताः॥
रोहिणी चोत्तरास्तिस्रो हस्ता स्वाती पुनर्वसू।
अनूराधाश्च युक्सोमं वैष्णवं वारुणं मघाः॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

चित्रा श्रविष्ठा पौर्णं च प्रोष्ठान्तेषु प्रशासिता ।

पुष्यश्शतभिषक् चैव विशाखा पूर्वभैस्सह ॥

देवेषु कथिता रौद्रा युक्तस्सर्वं शिवे मता ।

मानुषो पुष्य इष्टः स्यात् अन्ये वै निन्दितो सह ॥

वारौ कुजार्कजौ भित्वा देववाराः प्रशंसिताः ।

मानुषो रविवारं च वर्ज्ये .......... ॥

P.L.105a शुभकर्म न कर्तव्यं जीवे चा|स्तं गते बुधैः ।

शुक्रस्यास्तमये चापि प्रतिष्ठाद्यं न कारयेत् ॥

दिवा गर्भप्रतिष्ठा च शर्वायां वास्तुकर्म च ।

सर्वदोषकरं प्रोक्तं रात्रौ वा वेशनं भवेत् ॥

—

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

कारणे —

पौष्णादित्यमघा स्वाती त्वाष्ट्र सावित्र मैत्रकम् ।
प्राजापत्य शिवो विष्णुस्तिष्यश्चैवोत्तरत्रयम् ॥
षष्ठी च सप्तमी चैव प्रतिपत्पौर्णमास्यपि ।
द्वितीया पञ्चमी चैव तृतीया च त्रयोदशी ॥
? सितस्सौम्यामरगुरुः सूर्येन्दूनां वरं दिनम् ।
तद्धोरादर्शनांशाश्च तेषां द्रेक्काणकाश्शुभाः ॥
उदयः शस्तऽतेषां तत्र रव्युदयं विना ।
मेषकर्कटकं तौल्यं मकरं च विवर्जयेत् ॥
अन्ये च शुभदाः प्रोक्तास्तेषां पापं विसर्जयेत्

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

सुप्रभेदे —

अष्टमस्था ग्रहास्सर्वे कर्तुः कुर्वन्ति दुस्थितिम्।
प्राकादशगतास्सर्वे क्षेमारोग्यसमृद्धिदाः॥
? भार्गवो भयकृत्प्रोक्तो दशाब्दसप्तमस्थिताः।
नवद्विसप्तपञ्चस्थो गुरुः शोभनकृत्सदा॥
सोमो सौख्यकरः प्रोक्तो द्वितीये पञ्चमेऽपि च।
रविवारः शुभो युक्तः पौष्णहस्तत्र्युत्तरैः॥
सौरिवारः शुभः प्रोक्तः स्वातीरोहिणियोगतः।
बुधयुक्ता द्वितीया च गुरुवश्रो समायुतः॥
उत्तरैकादशी प्रोक्ता प्राणपीडां करोति हि।
पौष्णस्तु सप्तमीयुक्तः प्रजां दहति वाह्निवत्॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

? अशुभरोहिणीयोगतः सोमवारस्तु उत्तराषाढ-

P.L.105b. ? संयुतः, पितृस्थूणार्धनक्षत्रखण्डांश्च गुलिकान्यजे-त ॥

दुर्दिने च दिशां दाहे भूकम्पे चण्डमारुते ।

? अशनिध्वनि संयुक्ते दिवसस्तु शुभस्मृताः

कालविधान पद्धतौ

शिष्यजन्मदिवसेषु संक्रमे

प्रक्रमे शशि दिनेशयोरपि

पुण्ययोग युजि वा दिने नृणां

देहशुद्धिरभिधीयते परः ॥

रोहिण्युत्तररेवती वसुमरुत्पौष्णानुराधा मघा-

स्तिष्यादित्य शशाङ्क मूल दिनकृद्रौद्रेन्दुभे वैष्णभे ।

हित्वा पर्व चतुर्दशाष्टमतिथिर्मन्दारवारौ स्थिरं

न्त्राशि शुद्धियुतेऽष्टमेऽह्नि शुभदे दीक्षां विदध्याद्बुधः ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

वर्ज्येषु मासेष्वधिकाख्यमासे
संसर्पकेऽहस्पतिके सितस्य ।
गुरोश्च मौढ्यार्भकवार्धकेषु
शुभं विवर्ज्यं समसप्तके च ॥

संसर्परविमासि दर्शयुगळं पूर्णाद्वयं वास्ति चेत्
तस्मिन्पौष्णयुगं भवेद्यादि विदुस्तं केचिदंहस्पतिम् ।
अर्केन्द्वोर्यदि मध्ययोगयुगळं मध्येर्क मध्येर्कयोः
संक्रान्त्योरधिमास एव इति ते मासास्त्रयो निन्दिताः ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

२४

गुणेषु दोषेष्वधिकं च चिन्त्यं
षा ?
यदा तु दोषो बहवस्त्यजेत्तान्।
यदा गुणास्सन्ति तथा विधेयाः
स्य दोषकालस्य गुणस्य नेह ॥

अविहितात्गुणकोटियुतात्ध्र भात्
द्?
विहितमेव वरं गुणवर्जितम्।
सकलभाग्ययुतात्परपूरुषात्
स्वपतिरेव वरं हि कुलस्त्रियः॥

इति दीक्षाकालविधिः ?

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

28

## सिद्धान्तसारावल्याम् —

P.L.106a कालेवार्षिकपौषचैत्रसहिते देवोत्सवे दामने
संक्रान्तौ विषवेऽयने ग्रहणयो र्दीक्षा पवित्रोत्सवे ।
मैत्रार्कानल सौम्यपैत्र निर्ऋति पूषाख्य शार्ङ्गीश्वरम्
जैवत्रं रोहिणी कोत्तरत्रयमथो भौमार्कवारान् विना ॥
(60)

காமிகத்தில் கிரியாகாண்டம் —

मासनक्षत्र दोषं च वारदोषं न विद्यते ।
- - गर्भिणी प्रवेशस्तु परिपाक इति स्थितः ॥
मत्रपाकयुतान् शिष्यान् मासनक्षजं विना ।
सूतकप्रेतकाशौचौ दीक्षिताश्च प्रवेशकाः ॥
आत्मार्थे यजनं कुर्यात्परार्थे यजनं तथा ।
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने ॥

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

28

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
सर्वमासेषु कर्तव्यं आचार्यश्चोदितोऽग्निनोः ॥
गुरुशिष्य तथा योगे तथा भवति दक्षिणे ।
सर्वदा सर्वकालेषु कुर्याद्दीक्षां गुरोत्तमः ॥
न मासं न तिथीवारं न कालं न परीक्षयेत् ।
दीक्षामोक्षणे चैव कालक्षेपं न कारयेत् ॥
राजाभिषेक शत्रुघ्ने विद्याध्याने जनार्दने ।
दीक्षायां यागशालायां कालक्षेपं न कारयेत् ॥
१ शिष्य श्रोत्रिश्च योनिश्च गुरुजीभवादि लिङ्गकम् ।
मन्त्रं बिन्दुसमायुक्तं इतिस्यात् ज्ञान पुत्रकम् ॥
कुलालचक्रमद्विस्तु नानारूपेण दृश्यते ।
आचार्यं मनसा ध्यात्वा यदृश्य परमेश्वरौ ॥
कामिके ॥.

Transcript/MS from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.